उँस्वस्तिश्रीगणेशायनमः ॥ अथाखिलभारतवर्षीयदेशेषु समयनिर्णायकतया सकलव्यवहारप्रवर्त्तकनिखिलधर्म्मप्रवर्त्तक समस्तयजनयाजनसंस्कार सुमुहूर्तादिप्रवर्त्तक स्वस्वदेशीयतिथिपत्रेषु प्रतिवर्षं गंगानिर्गमावधिं वर्णयंति तत्र गंगानिर्याणावधिवर्णनं किंमूलमिति श्रीमन्महाराजाधिराजजंबूकाश्मीरतिव्बताद्यनेकदेशाधीश्वरश्रीमत्प्रतापसिंहानामाज्ञयाविचार्य्यते ननुगंगानिर्गमावधिवर्णनं किमहर्गणादिवद्गणितगम्यमुत पुराणादिगम्यम् नाद्यः सूर्य्यसिद्धांतादिसिद्धांतेषु मकरंदग्रहलाघवादिकरणेषु वराहसंहितादिसंहितासुच गंगानिर्गमावध्यानयनानिरुक्तेः सिद्धांताद्यनुक्तसोपपत्तिकगंगानिर्याणावधिसाधकगणितांतरस्याद्ययावदश्रवणाच्च न द्वितीयःगंगानिर्गमबोधकपुराणवाक्यानां गंगास्थितिबोधकपुराणवाक्यविरोधात् गंगानिर्गमावधिप्रतिपादनरूपयथाश्रुतस्वार्थेतात्पर्य्यस्यदुर्वचत्वात् नचगंगानिर्गमावधिप्रतिपादकवाक्यविरोधात् गंगास्थितिबोधकवाक्यानामेवनगंगास्थितिप्रतिपादकत्वमितिवाच्यं मानांतरवाधितत्वेनानिर्गमवाक्यानांदुर्बलत्वात् अतएवाक्षय्यंहवैचातुर्मास्ययाजिनः

सुकृतंभवतीति अपामसोमममृताअभूमेत्यादिश्रु-
त्यपेक्षया तद्यथेह कर्म्मचितोलोकःक्षीयते एवमेवा
मुत्रपुण्यचितोलोकःक्षीयते इतिश्रुतेर्बलवत्त्वं कृत
कत्वलिंगकविनाशित्वानुमानसहकृतत्वादिति वाच
स्पतिमिश्रादयः नच निश्चितप्रामाण्यकवाक्यमेव प्र
बलंप्रकृतंगंगास्थितिवोधकवाक्यंतुनतथा गंगानि
र्गमावधिबोधकवाक्यविरोधादितिवाच्यं गंगास्थि
तिबोधकवाक्यानामप्रामाण्यासिद्धौ तद्विरोधाभावात्
गंगानिर्गमावधिबोधकवाक्यप्रामाण्यं तत्प्रामाण्ये
च तद्विरोधात् गंगास्थितिबोधकवाक्यमप्रामाण्यमि
त्यन्योन्याश्रयात् नचतवापितथैवान्योन्याश्रय इति
वाच्यं ममतु मानांतरसहकृतत्वेनबलवत्त्वासिद्धौगं
गास्थितिबोधकवाक्यानां प्रामाण्यसिद्धेरन्योन्या
श्रयासंभवात् ननुगतकालिशेषकल्पाद्यानयनंसिद्धां
तसिद्धं पंचसहस्त्रवर्षमितकलिगताब्देगंगानिर्गमः
पुराणप्रतिपादित इतिसिद्धांतपुराणाभ्यां गंगानि
र्गमावधिंप्रतिवर्षं वर्णयामः तथाहि ब्रह्मवैवर्त्ते कृष्ण
जन्मखंडेअष्टाविंशत्याधिकशततमाध्याये कृष्णस्य
गोलोकप्रस्थानसमये गंगासरस्वतीपद्मावतीच
यमुनातथा गोदावरीस्वर्णरेखाकावेरीनर्मदामुने श

रावतीवाहुदाचकूलमालाचपुण्यदा समाययुश्चता
स्सर्वाःप्रणेमुःपरमेश्वरं उवाचजान्हवीदेवीरुदतीप
रमेश्वरं साश्रुनेत्रातिदीनासा विरहज्वरकातरा हे
नाथरमणश्रेष्ठयासिगोलोकमुत्तमम् अस्माकंका
गतिश्चात्रभविष्यतिकलौयुगे इतिगंगाप्रार्थनानंत
रं कलेःपंचसहस्राणितिष्ठवर्षाणिभूतले इति तथा
तत्रैव कृष्णजन्मखंडे नवतितमेध्याये कलेर्दश
सहस्राणिहरिस्तिष्ठतिमेदिनीम् देवानांप्रतिमापूजा
शास्त्राणिचपुराणकंतदर्द्धमपितीर्थानिगंगादीनिसुनि
श्चितं तदर्द्धंग्रामदेवाश्चवेदाश्चविदुषामपीति तथा
तत्रैवब्रह्मवैवर्त्तेकृष्णजन्मखंडे एकशताधिकविंशतित
मेध्याये श्रीकृष्णवाक्यं कलेर्दशसहस्राणिम
दर्चाभुवितिष्ठति तदर्द्धानिचवर्षाणिगंगाभुवनपाव
नीति तथासनत्कुमारसंहितायां कार्त्तिकमाहात्म्ये
कलेर्दशसहस्रांतेहरिस्त्यक्ष्यतिमेदिनीम् तदर्द्धेजा
न्हवीदेवीतदर्द्धेग्रामदेवता इति तथाब्रह्मवैवर्त्ते प्रकृ
तिखंडेपंचमाध्याये कलेःपंचसहस्रेचगतेवर्षेचमोक्ष
णं ॥ तथातत्रैवाष्टमाध्याये श्रीकृष्णवाक्यं अद्य
प्रभृतिदेवेशिकालः पंचसहस्रकं वर्षंस्थितिस्तेभा
रत्याःशापेनभविताभुवीत्यादिवाक्यैः कलेःपंचसह

स्त्रवर्षेगते गंगानिर्गमप्रतिपादनादितिचेन्न कलेः पंचसहस्त्रवर्षोत्तरं गंगानिर्गमप्रतिपादकवाक्यानां कल्पांतरपरत्वात् अतएवतत्रैवब्रह्मवैवर्त्ते षष्ठाध्याये कलेः पंचसहस्त्रचवर्षेस्थित्वाचभारते जग्मुस्ताश्च सरिद्रूपंविहाय श्रीहरेःपदमिति भूतकालिकागम नास्थितिपुनर्गमनैरन्यकल्पीयत्वस्यस्पष्टमुक्तेः अत एवतत्रैवब्रह्मवैवर्त्ते नवमाध्याये कलेःपंचसहस्त्राब्देस मतीतेसुरेश्वरी क्वगतासामहाभागातन्मेव्याख्यातुमर्ह सीतिनारदप्रश्नानन्तरं श्रीनारायणवाक्यं भार तंभारतीशापात्समागत्येश्वरेच्छया जगामतंचवैकु ठंशापांतेपुनरेवसा भारतंभारतीत्यक्त्वाजगामचहरेः पदं गंगासरस्वतीलक्ष्मीश्चैतास्तिस्त्रःप्रियाहरेः तु लसीसहिताब्रह्मन्चतस्त्रःकीर्त्तिताः श्रुताविति कलेः पंचसहस्त्राब्देतीते गंगावैकुंठं भूतकल्पेगतेतिप्रतीय ते नहिभविष्यत्कालिकंगमनं भारतागमनात्प्राक् विष्णोर्भार्य्यात्रयं कलेः पंचसहस्त्राब्दादनंतरंचतस्ट णांगमनात् भार्य्याचतुष्टयमित्यतोपिभूतकल्पिकमेवा गमनंगमनंचस्पष्टं नह्येतत्कल्पिकंपुनर्गमनमितिवि भावयंतुसंतः तस्मात् भूतकल्पिककलेःपंचसहस्त्रा ब्देतीतेगंगावैकुंठंगतवतीति प्रतीयते नाष्टविंशत्तमक

लौगमनंप्रतीयते किंचकलेःपंचसहस्रवर्षोत्तरं गंगा
निर्गमप्रतिपादकवाक्येषु तदर्द्धवर्षोत्तरंवेदग्रामदेवा
नांनिर्गमप्रतिपादनात् तस्यचप्रत्यक्षेणेदानींबाधात्
प्रत्यक्षविरुद्धार्थाभिधायकानां तेषामप्रामाण्यं प्र
सज्जेत नह्यष्टाविंशत्तमकलेःसार्द्धद्विसहस्रवर्षोत्तरं
वेदानिर्गमोजात इतिकस्यापिवुद्धिपथमारोहति वे
दानां तदुक्ताग्निहोत्रादीनां चाद्ययावत्प्रत्यक्षसिद्ध
तयातदभावप्रतिपादकवाक्यानामन्यकल्पाभिप्राय
कत्वेनैवप्रामाण्यावधारणात् तेषामेतत्कल्पाभिप्राय
कत्वे तेषांवाक्यानां कलौवर्णव्यवस्थितिपर्य्यंतम
ग्निहोत्रादिवैदिककर्म्माभिधायकवाक्यानांचाप्रामा
ण्यप्रसंगः तथाचकतिपयवाक्यानां प्रामाण्यस्वीका
रे वैदिककर्म्माभिधायकानां सर्वेषामिदानीमप्रामा
ण्यप्रसंगः तथाचवहूनामनुग्रहोन्याय्यइतिकतिपय
वाक्यानांकल्पांतराभिप्रायकत्वेनैव प्रामाण्यावधार
णमुचितं तथाचप्रत्यक्षादिप्रमाणांतरसहकृतानांगं
गास्थितिबोधकवाक्यानामेवप्राबल्यं नच गंगास्थि
तिबोधकवाक्यानामप्येतत्कल्पीयत्वे वीजाभावात्
निर्गमबोधकवाक्यानामिव स्थितिबोधकवाक्याना
मपितदन्यकल्पीयत्वं स्यादितिवाच्यं केदारखंडोक्त

वाक्यानामष्टाविंशतिपर्य्ययवृत्तांतबोधकत्वात् नान्य
कल्पीयत्वं तथाचोक्तं स्कांदे केदारखंडे पंचाशद
धिकैकशततमाध्याये मायापुरीवर्णनप्रस्तावे ना
रदप्रश्नानंतरं इदंपुण्यतमंतीर्थं वर्त्ततेभक्तनाय
क तथापिभवितापश्चादष्टाविंशतिपर्य्यये भगीरथो
महाभागःसूर्य्यवंशविवर्द्धनः आनयिष्यातिगंगांवैतप
सातोषिताच्छिवादिति भगवदुक्तेः नच केदारखं
डेसप्तसप्ताधिकशततमेऽध्याये गंगावासुकिसंवादे
भगीरथेनकैलासादानीतास्मीहवासुके निमंत्रिता
स्मिभूमौहिपितॄणांमुक्तिकारणात् सांप्रतंतदवश्यं
हिकर्त्तव्यंभगवन्मया चरमेऽस्मिन्युगेभूयआगामि
ष्यामितेस्थले इदानींमुंचमांशीघ्रंसमुद्रेमेगतिर्मते
ति गंगावाक्यात् अस्यवाक्यस्यपूर्वोक्तपंचाशदधि
कैकशततमाध्यायीयवाक्यैकवाक्यतयाच स्पष्टमव
गम्यते अष्टाविंशत्तमेकलौगंगायाःपातालगमनमि
तिवाच्यं प्रसंगविरोधात् तात्पर्य्यविरोधाच्च तथा
हितत्रायंक्रमः तत्राष्टाधिकात्रिंशत्तमेध्याये गंगानय
नार्थंतपसिस्थितान् वासुकिप्रमुखान्नागान्स्वार्थसिद्धौ
विघ्नकरान् महाबलान् दृष्ट्वाभगीरथउपायमचिंतयत्
अन्योपायमलभमानो ऽनन्यगतिकोविनयाविष्टो

भगीरथःसहस्रनामस्तवेन गंगांतुतोष तुष्टागंगाऽन्यदृष्टंस्वरूपंदर्शयित्वावरंवरयेतिप्राहेत्युक्तोभगीरथः स्वाभिलषितं वरंजगाद भगीरथउवाचकृपांविधेहिदासेऽस्मिन्मयिदुःखसमाकुलेनगंतव्यंत्वयादेवि पातालनिलयेशुभे विनामुक्तिंप्रेषयित्वामत्पितृन् कोपदग्धकान् त्वयासमग्रभावेनस्थेयंभारतखण्डके ॥ श्रीगंगोवाच ॥ भगीरथमहाभागएवमेवभविष्यति यावच्चंद्रग्रहेशाद्याः स्थास्यंत्यंवरमंडले तावत्कीर्त्तिर्महाराजभवितातेत्रिलोकके नामापितवचश्रुत्वासर्वपापैः प्रमुच्यते कलेर्द्वितीयपादेतु गमिष्यामिपुनस्तलमिति वरप्रदानानंतरंत्वयोदाहृतगंगावासुकिसंवादोऽस्ति तथा च पूर्वापरैकवाक्यतया त्वमेववद किमस्य तात्पर्यं गंगानिर्गमेउतगंगास्थितौ नच वरप्रदानपठितकलेर्द्वितीयपादे पातालगमनंतु तथापिनिष्प्रत्यूहमेवेतिवाच्यम् शुक्लप्रतिपदारभ्यदशादिनंयावत् पातालगमनमिव सीताअलकनंदादिधाराचतुष्टयवत् कलेर्द्वितीयपादे पातालेभोगवतीति प्रसिद्धधाराप्रवेशस्यावनितोनिर्गमाबोधकत्वात् तथाचोक्तंब्रह्मपुराणे षष्ठ्यादौकृष्णपक्षेतुभूमौसान्निहिताभवेत् यावत्पुनर

मावास्यादिनादिदशानित्यशः शुक्लप्रतिपदारभ्यदि
नानिदशानित्यशः पाताले सन्निधानंतुकरोतिस्वयमेव
हिशुक्लैकादशिकादीनिगंगास्वर्गतरंगिणी पंचम्यंता
निसास्वर्गेसदासन्निहिताभवेदितिविष्णुपुराणेविष्णु
पादविनिः क्रांताप्लावयंतींदुमंडलम् समंताद्ब्रह्मणः
पुर्य्यांगंगापततिवैदिवि सातत्रपतितादिक्षुचतुर्द्धाप्र
त्यपद्यत सीताचालकनंदाचचक्षुर्भद्राचवैक्रमात् इति
दिक्षुचतुर्द्धागमनस्यपातालगमनस्यच नभारतखंड
तोनिर्गमप्रत्यायकत्वम् अन्यथा शुक्लप्रातिपदारभ्य
शुक्लदशमींयावत् गंगायाभारतखंडेऽसत्त्वात्
स्नानदानादीनां निष्फलत्वापत्तेः नच पाताल
गमनस्य भारतखंडतोनिर्गमबोधकत्वे भगीरथ
स्यपातालगमनत्रासोनिरर्थकइतिवाच्यम् नागा
नांसमग्रभावेन पातालनयनस्याभिलषितत्वेनत
स्यैवत्रासजनकत्वात् अतिप्रयासलब्धधनस्यांशहा
नेरपित्रासजनकत्वाच्च अतएवसमग्रभावेनावस्थानं
प्रार्थितमिति अतएव त्वयासमग्रभावेनस्थयंभारत
खण्डक इतिभगीरथप्रार्थनोत्तरं भगीरथमहाभा
गएवमेवभविष्यति यावच्चंद्रग्रहेशाद्याःस्थास्यंत्यंव
रमंडले तावत्कीर्त्तिर्महाराजभवितातोत्रिलोकके

इति गंगावरप्रदानं संगच्छते नचधारात्रयस्या न्यखंडेषुगमनात् भारतखंडेचतस्तृणामवस्थाना भावात् तुर्य्यांशेनभारतखंडेस्थितत्वात् त्वयासमग्र भावेनेतिवराभ्यर्थनस्य एवमेवेति गंगावरप्रदान स्यचासंगतिरितिवाच्यम् समग्रभावेनावस्थानंन प्रवाहसाकल्येन किंतु भवनंभावः सत्त्वमितियावत् सामग्र्यंचसाकल्यरूपंव्यापकत्वार्थकं तथाचभार तखंडनिवृत्तिसत्त्वव्यापकसत्त्वेनस्थेयमितियावत् का लं भारतखंडस्थितिस्तावत्कालंस्थेयमितिफलितम् अतएववरप्रार्थनसमानार्थकंवरप्रदानं भगीरथमहा प्राज्ञएवमेवभविष्यति यावच्चंद्रग्रहेशाद्याःस्थास्यं त्यंवरमंडले तावत्कीर्त्तिर्महाराजभवितातेत्रिलोक के इतिसंगच्छते अन्यथाबाधितार्थप्रार्थनापत्तेःप्रा र्थनविरुद्धवरदानापत्तेश्चेति नचवरप्रदानेकल्पांतंकी र्त्यवस्थानमुक्तंनस्वकीयावस्थानमितिवाच्यम् गंगा वस्थानंविनाकीर्त्यवस्थानासंभवात् तत्कीर्त्तेस्तद्वि षयकत्वात् विषयाभावेन तत्स्थानासंभवात् प्रसिद्धं चैतल्लोके तडागदेवालयादिजन्यरूपकीर्त्तेस्तडागादि स्थितिपर्य्यंतसत्त्वं तडागादिविनाशेकीर्त्तिर्विनष्टेति व्यवहारस्यसर्वजनीनत्वादितिसिद्धम् सूर्य्यचंद्रस्थि

तिंयावत् भारतखंडस्थितिंयावत् गंगास्थितिरिति अतएवब्रह्मांडेनारदीये अष्टत्रिंशत्तमेऽध्याये वसुमोहिनीसंवादेच कलौतुसर्वतीर्थानिस्वंस्वंवीर्य्यंस्वभावतः गंगायांप्रतिमुंचंतिसातुदेविनकुत्रचिदितिगंगाशक्तिस्तीर्थांतरशक्तिसहिताकलौस्थास्यतीतिसंगच्छते अतएवच स्कांदेकेदारखंडे पंचत्रिंशत्तमेऽध्याये वरंब्रूहीतिशिववचनोत्तरं भगीरथउवाच गंगाख्यंपरमंधामवर्त्ततेशिखरेतव तन्मेदेहिपितॄणांहिसमुद्धारायभोःप्रभो अन्येकलियुगेघोरेनराःपुण्यविवर्ज्जिताःदृष्ट्वालोकान्हिगच्छंतिपुनरावृत्तिदुर्लभान् पीत्वामृतमयंवारिमुक्तिमैश्वर्य्यमाप्नुयुरितिघोरकलौपापिनांमुक्त्यर्थंवरप्रार्थनंसंगच्छतेअतएवचतत्रैवत्र्यष्टाधिकद्विशततमेऽध्यायेहरिद्वारमाहात्म्ये क्षेत्राणांपंचकंपृथ्व्यांस्थास्यतिप्रवरेकलौ गंगाद्वारंचकेदारंकाशीगंगागमस्तथा गंगाचसंगतायत्रसागरेणमहामते गंगाचस्थास्यतेत्रैवसत्यमेतच्छिवेरितामिति प्रवरकालौगंगास्थितिप्रतिपादनंसंगच्छतेइति नचान्यत्रतदभावइतिवाच्यम् प्रवाहरूपायास्तस्याःसर्वत्रैकाकारत्वात् क्षेत्रमाहात्म्याधिक्येचनाधिक्यप्रतिपादनात् अन्यथाप्रतिक्षणंतत्रजलांतरप्रवेशात्श

क्तिप्रवेशानिर्गमानामानंत्यापत्तेः क्षणिकत्वापत्तेश्चेति संक्षेपः इतिश्रीमन्महाराजाधिराजजम्बूकाश्मीराद्यनेकदेशाधीश्वर श्रीमत्प्रतापसिंहानामाज्ञया मद्रदेशनिवासिसदानंदात्मजश्रीगणेशशास्त्रिकृतागंगाव्यवस्थासंपूर्णा ॥ निधिपतिशोधिता ॥



